# .. Mantrapushpa ..

# ॥ मन्त्रपुष्पं ॥

## Sanskrit Document Information

Text title : mantrapushhpaM

File name : mantrapushpa.itx

Location : doc_veda

Author : Vedic Tradition

Language : Sanskrit

Subject : philosophy/hinduism

Transliterated by : Rajagopal Iyer (rajsand at yahoo.com)

Proofread by : Rajagopal Iyer (rajsand at yahoo.com)

Latest update : June 14, 2000

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



May 10, 2017

*sanskritdocuments.org*

# ॥ मन्त्रपुष्पं ॥

ॐ

योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति ।
चन्द्रमा वा अपां पुष्पम्। पुष्पवान् प्रजावान् पशुमान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ १॥

अग्निर्वा अपामायतनम्। आयतनवान् भवति ।
योऽग्नेरायतनं वेद । आयतनवान् भवति ।
आपो वा अग्नेरायतनम् । आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ २॥

वायुर्वा अपामायतनम्। आयतनवान् भवति ।
यो वायोरायतनं वेद । आयतनवान् भवति ।
आपो वै वायोरायतनम्। आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ ३॥

असौ वै तपन्नपामायतनम्। आयतनवान् भवति ।
योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति ।
आपो वा अमुष्य तपत आयतनम्। आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ ४॥

चन्द्रमा वा अपामायतनम् । आयतनवान् भवति ।
यश्चन्द्रमस आयतनं वेद । आयतनवान् भवति ।
आपो वै चन्द्रमस आयतनम्। आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ ५॥

नक्षत्राणि वा अपामायतनम्। आयतनवान् भवति ।
यो नक्षत्राणामायतनं वेद। आयतनवान् भवति ।
आपो वै नक्षत्राणामायतनम्। आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ ६॥

पर्जन्यो वा अपामायतनम्। आयतनवान् भवति ।
यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति ।
आपो वै पर्जन्यस्याऽऽयतनम्। आयतनवान् भवति ।
य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति ॥ ७॥
संवत्सरो वा अपामायतनम्। आयतनवान् भवति ।
यस्संवत्सरस्यायतनं वेद । आयतनवान् भवति ।
आपो वै संवत्सरस्यायतनम् । आयतनवान् भवति ।
य एवं वेद। योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ॥ ८॥

Encoded with Accents by Rajagopal Iyer rajsand@yahoo.com

.. Mantrapushpa ..
was typeset using XƎLaTeX 0.99996
on May 10, 2017

Please send corrections to *sanskrit@cheerful.com*